॥ ॐ ॥

# भज गोविन्दम्

१. भज गोविन्दं भज गोविन्दम् गोविन्दं भज मूढ़मते।
सम्प्राप्ते सन्निहिते काले न हि नहि रक्षति डुकृण करणे।।

२. मूढ़ जहीहि धनागम तृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम्।
यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम्।।

३. नारीस्तनभरनाभीदेशं दृष्ट्वा मा गा मोहावेशम्।
एतन्मांस वसादिविकारं मनसि विचिन्तय वारं वारम्।।

४. नलिनीदलगत जलमतितरलं तद्वज्जीवितमतिशयचपलम्।
विद्धि व्याध्यभिमानग्रस्तं लोकं शोकहतं च समस्तम्।।

५. यावद्वित्तोपार्जनसक्तः तावन्निजपरिवारो रक्तः।
पश्चाज्जीवति जर्जरदेहे वार्तां कोऽपि न पृच्छति गेहे।।

६. यावत्पवनो निवसति देहे तावत्पृच्छति कुशलं गेहे।
गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन्काये।।

७. बालस्तावत्क्रीडासक्तः तरुणस्तावत्तरुणीसक्तः।
वृद्धस्तावच्चिनतसक्तः परमे ब्रह्मणि कोऽपि न सक्तः।।

८. का ते कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः।
कस्य त्वं कः कुतः आयातः तत्त्वं चिन्तय तदिह भ्रातः।।

९. सत्संगत्वे निस्संगत्वं निस्संगत्वे निर्मोहत्वम्।
निर्मोहत्वे निश्चलतत्त्वं निश्चलतत्त्वे जीवन्मुक्तिः।।

१०. वयसि गते कः कामविकारः शुष्के नीरे कः कासारः।
क्षीणे वित्ते कः परिवारः ज्ञाते तत्त्वे कः संसारः।।

११. मा कुरु धनजनयौवनगर्वं हरति निमेषात्कालः सर्वम्।
मायामयमिदमखिलं बुद्ध्वा ब्रह्मपदं त्वं प्रविश विदित्वा।।

१२. दिनयामिन्यौ सायं प्रातः शिशिरवसन्तौ पुनरायातः।
कालः क्रीडति गच्छत्यायुः तदपि न मुंचत्याशावायुः।।

१३. का ते कान्ता धनगतचिन्ता वातुल किं तव नास्ति नियन्ता।
त्रिजगति सज्जन संगतिरेका भवति भवार्णव तरणे नौका।।

१४. जटिलो मुण्डी लुंचितकेशः काषायाम्बर बहुकृतवेषः।
पश्यन्नपि न च पश्यति मूढ़ः ह्युदरनिमित्तं बहुकृतवेषः।।

१५. अंगं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम्।
वृद्धो याति गृहीत्वा दण्डं तदपि न मुंचति आशापिण्डम्।।

१६. अग्रे वह्निः पृष्ठे भानू रात्रौ चुबुकसमर्पित जानू।
करतलभिक्षस्तरुतलवासः तदपि न मुंचत्याशापाशः।।

१७. कुरुते गंगासगरगमनं व्रतपरिपालनमथवा दानम्।
ज्ञानविहीन सर्वमतेन भजति न मुक्तिं जन्मशतेन।।

१८. सूरमन्दिरतरुमूलनिवासः शय्या भूतलमजिनं वासः।
सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः।।

१६. योगरतो वा भोगरतो संगरतो वा संगविहीनः।
यस्य ब्रह्मणि रमते चित्तं नन्दति नन्दति नन्दत्येव।।

२०. भगवद्गीता किंचिदधीता गंगाजललवकणिका पीता।
सकृदपि येन मुरारि समर्चा क्रियते तस्य यमेन न चर्चा।।

२१. पुनरपि जननं पुनरपि मरणं पुनरपि जननी जठरे शयनम्।
इह संसारे खलु दुस्तारे कृपयाऽपारे पाहि मुरारे।।

२२. रथ्याचर्पटविरचितकन्थः पुण्यापुण्यविवर्जित पन्थः।
योगी योगनियोजित चित्तः रामते बालेन्मत्तवदेव।।

२३. कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः।
इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचाररम्।।

२४. त्वयि मयि चान्यत्रैको विष्णुः व्यर्थं कुप्यसि मयि असहिष्णुः।
भव समचित्तः सर्वत्र त्वें वांच्छस्यचिराद्यदि विष्णुत्वम्।।

२५. शत्रौ मित्रे पुत्रे बन्धौ मा कुरु यत्नें विग्रहसन्धौ।
सर्वस्मिन्नपि पश्यत्मानं सर्वत्रोत्सृज भेदाज्ञानम्।।

२६. कामं क्रोधं लोभं मोहं त्यक्त्वाऽऽत्मानं पश्यति सोऽहम्।
आत्मज्ञानविहीनामूढाः ते पच्यन्ते नरकनिगूढ़ाः।।

२७. गेयं गीता नामसहस्रं ध्येयं श्रीपतिरूपमजस्रम्।
नेयं सज्जनसंगे चित्तं देयं वित्तजनाय च वित्तम्।।



२८. सुखतः त्त्यिते रामाभोगः पश्चाद्धन्त शरीरे रोगः।
यद्यपि लोके मरणं शरणम् तदपि न मुंचति पापाचरणम्।।

२६. अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम्।
पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता रीतिः।।

३०. प्राणायामं प्रत्याहारं नित्यानित्यविवेकविचारम्।
जाप्यसमेत समाधिविधानं कुर्ववधानं महदवधानम्।।

३१. गुरुचरणाम्बुजनिर्भरभक्तः संसारदचिराद्भव मुक्तः।
सेन्द्रियमानसनियमादेव द्रक्ष्यसि निजहृदयस्थं देवम्।।